# चम्पूरामायणे

# बालकाण्डम्

३१ –०६.०८.२०१८

vyoma
॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam · Value Education · Technology



vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

# मङ्गलम्

- लक्ष्मीं तनोतु नितरामितरानपेक्षम्
- अङ्घ्रिद्वयं निगम-शाखि-शिखा-प्रवालम् ।
- हैरम्बमम्बुरुह-डम्बर-चौर्य-निघ्नम्
- विघ्नाद्रि-भेद-शतधार-धुरन्धरं नः ॥

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

# पुनरावर्तनम्

- सगरः अश्वान्वेषणार्थं अंशुमन्तं प्रेषयामास
- अंशुमान् पातालं गत्वा अश्वं लब्ध्वा दग्धान् पितॄन् पश्यति
- गङ्गां पातालमानेतुं गरुडेन उक्तः अंशुमान्
- यज्ञं समाप्य दिवङ्गतः सगरः – अंशुमतः दिलीपस्य च प्रयत्नः
- भगीरथनिश्चयः – गोकर्णे तपः – शिवस्य अनुग्रहः

# गङ्गावतरणकुलकम्

- अथ वीचीचयच्छन्नदिगन्तगगनान्तरा । शशाङ्कशङ्खसम्भिन्नतारामौक्तिकदन्तुरा॥७८॥
- तरङ्गाकृष्टमार्ताण्डतुरङ्गायासितारुणा । फेनच्छन्नस्वमातङ्गमार्गणव्यग्रवासवा॥७९॥
- आविःशाखाशिखोन्नेयनन्दनद्रुमकर्षणा । एकोदकनभोमार्गदिङ्मूढदिवसेश्वरा॥८०॥
- आवर्तगर्तसम्भ्रान्तविमानप्लवविप्लवा । नीलजीमूतशैवालकृतरेखाहरित्तटा॥८१॥
- अवलेपभराक्रान्ता सुरलोकतरङ्गिणी। पपात पार्वतीकान्तजटाकान्तारगह्वरे॥८२॥

# अवलेपभराक्रान्ता सुरलोकतरङ्गिणी।
# पपात पार्वतीकान्तजटाकान्तारगह्वरे॥८१॥

- अवलेप-भर-आक्रान्ता, सुर-लोक-तरङ्गिणी, पपात, पार्वती-कान्त-जटा-कान्तार-गह्वरे
- पपात = पतिता
- का पपात? सुरलोकतरङ्गिणी = देवनदी गङ्गा
- कीदृशी सुरलोकतरङ्गिणी? अवलेपभराक्रान्ता – अवलेपस्य = गर्वस्य, भरेण = भारेण, आक्रान्ता = पूरिता

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education ...

# अवलेपभराक्रान्ता सुरलोकतरङ्गिणी।
# पपात पार्वतीकान्तजटाकान्तारगह्वरे॥८१॥

- कुत्र पपात? पार्वतीकान्तजटाकान्तारगह्वरे – पार्वतीकान्तस्य = शिवस्य, जटा = कपर्दः एव, कान्तारः = महारण्यम्, तस्य गह्वरे = कुहरे
- अन्वयः – अवलेपभराक्रान्ता सुरलोकतरङ्गिणी पार्वतीकान्तजटाकान्तारगह्वरे पपात ।
- तात्पर्य्यम् – गर्वभारेण पूरिता देवनदी गङ्गाः शिवस्य कपर्दरूपस्य अरण्यस्य महाकुहरे पतिता ।

# अवलेपभराक्रान्ता सुरलोकतरङ्गिणी।
# पपात पार्वतीकान्तजटाकान्तारगह्वरे॥८१॥

- अवलेपभराक्रान्ता – अवलेपस्य भरः, अवलेपभरेण आक्रान्ता ।
  "दर्पोऽवलेपोऽवष्टम्भः" (अमरः)
- सुरलोकतरङ्गिणी – सुराणां लोकः, सुरलोकस्य तरङ्गिणी
- पपात – "पतॢ गतौ" – लिट्, प्रथम.१

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education - Technology

# अवलेपभराक्रान्ता सुरलोकतरङ्गिणी।
# पपात पार्वतीकान्तजटाकान्तारगह्वरे॥८१॥

- पार्वती... – पार्वत्याः कान्तः, पार्वतीकान्तस्य जटा, पार्वतीकान्तजटा एव कान्तारः, पार्वती...कान्तारस्य गह्वरम्, तस्मिन् । “महारण्ये दुर्गपथे कान्तारं पुन्नपुंसकम्”, “देवखातबिले गुहा। गह्वरं” (अमरः)
- कुलकम् – परस्परान्वितानां पञ्चानां श्लोकानां समूहः । “कलापकं चतुर्भिश्च पञ्चभिः कुलकं मतम्”
- पपात – गर्वोद्रिक्ताः पतनं प्राप्नुवन्त्येव इति ध्वनिः ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education ...

# अथ वीचीचयच्छन्नदिगन्तगगनान्तरा ।
# शशाङ्कशङ्खसम्भिन्नतारामौक्तिकदन्तुरा ॥७९॥

- अथ, वीची-चय-च्छन्न-दिगन्त-गगन-अन्तरा, शशाङ्क-शङ्ख-सम्भिन्न-तारा-मौक्तिक-दन्तुरा
- अथ = शिवस्य अङ्गीकारानन्तरम् (सुरलोकतरङ्गिणी पपात)
- कीदृशी सुरलोकतरङ्गिणी? वीचीचयच्छन्नदिगन्तगगनान्तरा – वीचीनाम् = तरङ्गाणाम्, चयः = समूहः, तेन छन्नम् = आच्छादितम्, दिगन्तगगनस्य = नभोमण्डलस्य, अन्तरम् = अन्तरालम्, यया तादृशी

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education ...

# अथ वीचीचयच्छन्नदिगन्तगगनान्तरा ।
# शशाङ्कशङ्खसम्भिन्नतारामौक्तिकदन्तुरा ॥७९॥

- पुनः कीदृशी सुरलोकतरङ्गिणी? शशाङ्कशङ्खसम्भिन्नतारामौक्तिकदन्तुरा – शशाङ्कः = चन्द्रः, स एव शङ्खः = कम्बुः, तेन सम्भिन्नानि = सङ्गतानि, ताराः = नक्षत्राणि, एव मौक्तिकानि = मुक्तामणयः, तैः दन्तुरा = व्याप्ता
- तात्पर्य्यम् – स्वस्य तरङ्गाणां समूहेन सम्पूर्णं नभोमण्डलम् आच्छादयन्ती, चन्द्ररूपेण शङ्खेन सङ्गतैः नक्षत्ररूपैः मुक्तामणिभिः व्याप्ता [गङ्गा शिवस्य जटाकुहरे पपात)

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education

# अथ वीचीचयच्छन्नदिगन्तगगनान्तरा ।
# शशाङ्कशङ्खसम्भिन्नतारामौक्तिकदन्तुरा ॥७९॥

- वीची – वीचीनां चयः, वीचीचयेन च्छन्नम्, दिशाम् अन्तः, दिगन्तस्य गगनम्, दिगन्तगगनस्य अन्तरम्, वीचीचयच्छन्नं दिगन्तगगनान्तरं यया । “भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिः” (अमरः)
- शशाङ्क – शशाङ्कः एव शङ्खः, ताराः एव मौक्तिकानि, शशाङ्कशङ्खेन सम्भिन्नानि, शशाङ्कशङ्खसम्भिन्नानि तारामौक्तिकानि, शशाङ्क...मौक्तिकैः दन्तुरा

तरङ्गाकृष्टमार्ताण्डतुरङ्गायासितारुणा।
फेनच्छन्नस्वमातङ्गमार्गणव्यग्रवासवा॥८०॥

- तरङ्ग-आकृष्ट-मार्ताण्ड-तुरङ्ग-आयासित-अरुणा, फेन-छन्न-स्व-मातङ्ग-मार्गण-व्यग्र-वासवा
- कीदृशी सुरलोकतरङ्गिणी? तरङ्गाकृष्टमार्ताण्डतुरङ्गायासितारुणा – तरङ्गैः = वीचिभिः, आकृष्टाः = मार्गभ्रष्टाः, ये मार्ताण्डस्य = सूर्यस्य, तुरङ्गाः = अश्वाः, तैः आयासितः = श्रान्तः, अरुणः = सूर्यसारथिः, यया सा

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education ...

# तरङ्गाकृष्टमार्ताण्डतुरङ्गायासितारुणा।
# फेनच्छन्नस्वमातङ्गमार्गणव्यग्रवासवा॥८०॥

- पुनः कीदृशी सुरलोकतरङ्गिणी? फेनच्छन्नस्वमातङ्गमार्गणव्यग्रवासवा – फेनैः = डिण्डीरमण्डलैः, छन्नः = आच्छादितः, यः स्वमातङ्गः = आत्मनः गजः (ऐरावतः) , तस्य मार्गणे = अन्वेषणे, व्यग्रः = सम्भ्रान्तः, वासवः = इन्द्रः यस्याः सा
- तात्पर्य्यम् – यदा गङ्गा आकाशात् भूमिम् अवतरति, तदा आकाशे तस्याः वीचिभिः सूर्याश्वाः मार्गभ्रष्टाः, तेषां नियन्त्रणं कर्तुं प्रयतमानः सूर्यसारथिः अरुणः नितरां श्रान्तः । पुनश्च, सरभसं प्रवहन्त्याः तस्याः फेनैः शुभ्रवर्णः इन्द्रस्य गजः ऐरावतः आच्छन्नः, तम् अन्विष्यन् इन्द्रः सम्भ्रान्तः

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam - Value Education

# तरङ्गाकृष्टमार्ताण्डतुरङ्गायासितारुणा।
# फेनच्छन्नस्वमातङ्गमार्गणव्यग्रवासवा॥८०॥

- तरङ्गाकृष्ट... – तरङ्गैः आकृष्टाः, मार्ताण्डस्य तुरङ्गाः, तरङ्गाकृष्टाः मार्ताण्डतुरङ्गाः, तरङ्गाकृष्टमार्ताण्डतुरङ्गैः आयासितः, तरङ्गा...आयासितः अरुणः यया सा । "विकर्तनार्क<u>मार्तण्ड</u>मिहिरारुणपूषणः" (अमरः)
- फेन... – फेनैः छन्नः, स्वस्य मातङ्गः, फेनच्छन्नः स्वमातङ्गः, फेनच्छन्नस्वमातङ्गस्य मार्गणम्, फेन...मार्गणे व्यग्रः, फेन...व्यग्रः वासवः यया सा

Vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education

# आविःशाखाशिखोन्नेयनन्दनद्रुमकर्षणा।
# एकोदकनभोमार्गदिङ्मूढदिवसेश्वरा॥८१॥

- आविः-शाखा-शिखा-उन्नेय-नन्दन-द्रुम-कर्षणा, एक-उदक-नभो-मार्ग-दिक्-मूढ-दिवस-ईश्वरा
- कीदृशी सुरलोकतरङ्गिणी? आविःशाखाशिखोन्नेयनन्दनद्रुमकर्षणा – आविः = आविर्भूताः, दृष्टाः, याः शाखानां शिखाः = अग्रभागाः, तैः उन्नेयाः = अनुमेयाः ये नन्दनस्य = इन्द्रोद्यानस्य, द्रुमाः = वृक्षाः, तेषां कर्षणम् = विलेखनं यस्याः सा ।

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam - Value Education

# आविःशाखाशिखोन्नेयनन्दनद्रुमकर्षणा।
# एकोदकनभोमार्गदिङ्मूढदिवसेश्वरा॥८१॥

- पुनः कीदृशी सुरलोकतरङ्गिणी? एकोदकनभोमार्गदिङ्मूढदिवसेश्वरा – एकोदकः = केवलजलाप्लुतः, नभोमार्गः = आकाशपथः, येन दिङ्मूढः = दिग्भ्रान्तः, दिवसेश्वरः = सूर्यः यस्याः सा
- तात्पर्य्यम् – गङ्गाप्रवाहेण नन्दनवनस्य वृक्षाः आकृष्टाः नीयन्ते स्म, तत्रापि तेषां प्रकाण्डानां जलनिमग्नत्वात् शाखाग्रभागाः एव दृश्यन्ते स्म, येषां दर्शनेन इमे नन्दनद्रुमाः इति अनुमितिः करणीया । किञ्च, सर्वत्र नभोमण्डलस्य जलाप्लावितत्वेन सूर्योऽपि दिग्भ्रान्तः बभूव ।

vyoma ॥ वाचं धेनुमुपासीत॥ Samskrtam - Value Education

# आविःशाखाशिखोन्नेयनन्दनद्रुमकर्षणा।
# एकोदकनभोमार्गदिङ्मूढदिवसेश्वरा॥८१॥

- आविःशाखा... – शाखानां शिखाः शाखाशिखाः, आविर्भूताः शाखाशिखाः, आविःशाखाशिखाभिः उन्नेयाः, नन्दनस्य द्रुमाः, आविःशाखाशिखोन्नेयाः नन्दनद्रुमाः, आविः...द्रुमाणां कर्षणं यस्याः सा
- एकोदक... – एकम् उदकम् यस्मिन् सः, नभसः मार्गः, एकोदकः नभोमार्गः, एकोदकनभोमार्गेण दिङ्मूढः, एकोदक...दिङ्मूढः दिवसेश्वरः यस्याः सा

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education

# आवर्तगर्तसम्भ्रान्तविमानप्लुवविप्लुवा।
# नीलजीमूतशैवालकृतरेखाहरित्तटा॥८२॥

- आवर्त-गर्त-सम्भ्रान्त-विमान-प्लुव-विप्लुवा, नील-जीमूत-शैवाल-कृत-रेखा-हरित्-तटा
- कीदृशी सुरलोकतरङ्गिणी? आवर्तगर्तसम्भ्रान्तविमानप्लुवविप्लुवा – आवर्ताः = अम्भसां भ्रमाः, ते एव गर्ताः = कुहराणि, तेषु सम्भ्रान्तनि = परिभ्रममाणानि, यानि विमानानि = व्योमयानानि, एव प्लुवाः = उडुपानि, तेषां विप्लुवः = विशिष्टप्लुवनं यस्यां सा

आवर्तगर्तसम्भ्रान्तविमानप्लुवविप्लुवा।
नीलजीमूतशैवालकृतरेखाहरित्तटा॥८२॥

- पुनः कीदृशी ? नीलजीमूतशैवालकृतरेखाहरित्तटा – नीलाः जीमूताः = नीलमेघाः, ते एव शैवालानि = जलनील्यः, तैः कृताः = विरचिताः, रेखाः = श्रेणयः, येषां तानि हरित्तटानि = दिक्कूलानि यया सा ।
- तात्पर्य्यम् – गङ्गायाः जलभ्रमेषु भ्रममाणानि व्योमयानानि उडुपानीव प्लुवमानानि दृश्यन्ते स्म । जलस्य राभस्येन दूरोत्क्षिप्ताः नीलमेघाः दिगन्तेषु नदीकूले श्रेणीकृताः शैवाला एव दृश्यन्ते स्म ।

vyoma ॥ वाचं धेनुमुपासीत॥
Samskritam -Value Education...

# आवर्तगर्तसम्भ्रान्तविमानप्लवविप्लवा।
# नीलजीमूतशैवालकृतरेखाहरित्तटा॥८२॥

- आवर्त... – आवर्तानां गर्तः, आवर्तगर्तेषु सम्भ्रान्ताः, आवर्तगर्तसम्भ्रान्तानि विमानानि, आवर्त...विमानानि एव प्लवाः, आवर्त...प्लवानां विप्लवः यस्यां सा
- नीलजीमूतशैवालकृतरेखाहरित्तटा = नीलाः जीमूताः, नीलजीमूताः एव शैवालाः, नील...शैवालैः कृताः, नील...कृताः रेखाः येषां ते, हरितां तटाः, नील...रेखाः हरित्तटाः यया सा

vyoma
॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

# गङ्गावतरणकुलकम्

- अथ वीचीचयच्छन्नदिगन्तगगनान्तरा । शशाङ्कशङ्खसम्भिन्नतारामौक्तिकदन्तुरा॥७८॥
- तरङ्गाकृष्टमार्ताण्डतुरङ्गायासितारुणा । फेनच्छन्नस्वमातङ्गमार्गणव्यग्रवासवा॥७९॥
- आविःशाखाशिखोन्नेयनन्दनद्रुमकर्षणा । एकोदकनभोमार्गदिङ्मूढदिवसेश्वरा॥८०॥
- आवर्तगर्तसम्भ्रान्तविमानप्लवविप्लवा । नीलजीमूतशैवालकृतरेखाहरित्तटा॥८१॥
- अवलेपभराक्रान्ता सुरलोकतरङ्गिणी। पपात पार्वतीकान्तजटाकान्तारगह्वरे॥८२॥






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in









- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in